याम्रिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥४॥

---

हे रुद्र ते तव या तनूः प्रसिद्धा । श्रूयते हि तस्यैते तनुवौ घोराऽन्या शिवान्येति । महाभारतेऽपि द्वे तनू तस्य देवस्य देवज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते चैव शतधा पुनरिति । सा तनूः कीदृशी । अघोरा । आयुर्वैरकारणभयंकरी घोरा सा न भवतीत्यघोरा । न केवलं भयंकरत्वाभावमात्रवर्ता किं तु शिवा शिवंकरी सुखप्रदा । न केवलं सांसारिकसुखमात्रप्रदा किं तु परमपुरुषार्थभूतमोक्षहेतुज्ञानप्रदाऽपीत्याह । अपापकाशिनीति । अपापशब्देन पापविरोधिब्रह्मात्मतत्त्वज्ञानमुच्यते । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयत एवँ ह वाऽस्य सर्वे पाप्मानः प्रदूयन्त इति श्रुतेः । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति स्मृतेश्च । अपापस्य काशिनी प्रकाशयित्री ज्ञानप्रदेति यावत् । आत्मबुद्धिप्रकाशमिति श्रुतेः । एवंविधा या तव तनूरस्ति तया शन्तमया निरतिशयसुखरूपया तन्वा नोऽस्मानभिचाकशीहि अभितः सर्वतः प्रकाशयुतान्कुरु । अद्वितीयब्रह्मात्मतत्त्वमेव सर्वतः प्रकाशय । यस्मिन्विज्ञाते सर्वमिदं विज्ञातमिति श्रुतेः । अभिचाकशीहीति यङ्लुगन्तप्रयोगेण भृशार्थरूपक्रियासमभिहारः प्रदर्शितः । अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारयुक्तान्कुर्वित्यर्थः । शंतमयाऽभिचाकशीहीत्यनेन परमेश्वरस्य चिदानन्दविग्रहत्वं प्रदर्शितम् । ननु मन्नमस्कारमात्रेण मोक्षमिच्छसि तस्य श्रवणमननानिदिध्यासनादिबहुयत्नसाध्यत्वादित्याशङ्क्य संबोधयति गिरिशंतेति । गिरि प्रतिज्ञारूपायां वाचि स्थित्वा लोकानां शं मोक्षसुखं तनोतीति गिरिशंतः । श्रवणाद्यायासं विनाऽपि केवलं भगवन्नमस्कारघटितदिव्यनामधेयात्मकश्रीरुद्रजपमात्रेण युक्तो मोक्षाभिलाषः । एतर्ह वा अमृतो भवतीति श्रुतेः । इति द्वितीयसंबोधनस्वारस्यम् । अस्य मन्त्रस्य स्वाराट् ऋषिः । त्रिवृदनुष्टुप्छन्दः । शंभुर्देवता ।

स्मेराननं चन्द्रकलावतंसं गङ्गाधरं शैलसुतासहायम् ।
त्रिलोचनं भस्मभुजङ्गभूषं ध्यायेत्पशूनां पतिमीशितारम् ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥ ५

---

नित्यकर्माविरोधेन त्रिरात्रं निरन्तरजपात्पुरश्चरणसिद्धिः । गोशान्त्यादिफलप्रदोऽयं मन्त्रः ॥ इति तृतीयः ॥ ३ ॥

एवं द्वितीयतृतीयाभ्यामिष्टसिद्धिः प्रार्थिता । अथ चतुर्थमन्त्रेणानिष्टपरिहारं प्रार्थयते यामिषुमिति ।

गिरौ कैलासे स्थित्वा लोकानां शं शिवं तनोतीति गिरिशन्तः । हे गिरिशन्त यामिषुं हस्ते बिभर्षि धारयसि । किमर्थम् । अस्तवे । असितुं पापिष्ठान्क्षेप्तुम् । छन्दसि तुमर्थे तवेन्प्रत्ययः । तामिषुं शिवां कुरु । शिवंकरस्त्वमिषुं शिवां कर्तुमर्हसीति संबोधनाभिप्रायः । कीदृशमिषोः शिवत्वं तत्राह मा हिꣳसीरिति । पुरुषमस्मदीयं पुत्रपौत्रादिरूपं तथा जगत् अस्मदीयं गोमहिष्यादिकं गृहारामक्षेत्रादिकं च मा हिंसीः । एतदेवेषोः शिवत्वकरणमिति भावः । अत्र गिरिशंतेत्यनेनैव चरितार्थतया पुनर्गिरित्रेति संबोधनमधिकं सदर्थविशेषं ज्ञापयतीति तं दर्शयामः ॥ अकृत्याकार्यकृदपि मां भजते चेदवश्यं रक्षिष्यामीति परमेश्वरस्य प्रतिज्ञा । अत एव खलूपानुवाक्यकाण्डे मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं ब्रह्मचर्यमिति प्रस्तुत्य तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यमिति नाभानेदिष्ठस्याकृत्यमुक्त्वा तं प्रति यज्ञे मा भजाथ ते पशून्नाभिमंस्य इति भगवतः प्रतिज्ञा श्रूयते । पुराणेतिहासेषु चैवंजातीयकानि भूयांसि वचनान्यस्य विषयः । तथा च गिरि प्रतिज्ञारूपायां वाचि स्थित्वा भजतस्त्रायत इति गिरित्रः । हे गिरित्र अकृत्यकारिणोऽपि मम नाभानेदिष्ठस्येव त्वां भजतः पुत्रपौत्रादिकं पालयेति संबोधनाभिप्रायः ॥ इति चतुर्थः ॥ ४ ॥

तदेवं नमस्ते रुद्रेति नमस्कृत्य द्वितीयतृतीयचतुर्थैरिष्टप्राप्त्यनिष्टपरिहारौ प्रार्थितौ । इदानीं स्तुतिपूर्वकं तदुभयं प्रार्थयते शिवेन वचसेति ।

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥
अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥६॥

गिरिशब्देन गिरिरूपा वेदा उच्यन्ते। तत्र श्रुतिः तꣳह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकारेति प्रस्तुत्य वेदा वा एत इति । तथा च गिरिरूपेषु वेदेषु शेते तिष्ठतीति गिरिशो वेदप्रतिपाद्यः । हे गिरिश अच्छ निर्मलं त्वां शिवेन वचसा वदामसि स्तुम इत्यर्थः । कीदृशी स्तुतिस्तत्राह यथा येन प्रकारेण कृतया स्तुत्या नोऽस्माकं संबाधि सर्वमित्सर्वमपि जगत्पशुपुत्रादिरूपं जङ्गमजातम् ।अयक्ष्मम-रोगं सुमनाः सौमनस्योपेतं सुखितं च असत् स्यात् तथा स्तुम इति । अत्र गिरिशेत्यनेन निखिलवेदवर्णनीयस्य स्तोत्रं युक्तमेवेति दर्शितम् । तत्र पापिष्ठस्य उक्तिसंबन्धात्परमेश्वरस्य मालिन्यमाशङ्क्य अच्छेति पुनः संबोधयति। नित्यं निरवद्यस्य मलिनमदुक्तिसंबन्धेऽपि न काचित्क्षतिः। न हि गङ्गाजलस्य रथ्योदकसंयोगेन पावनता गच्छति प्रत्युत गङ्गानुषङ्गाद्रथ्योदकमेव स्वयं च पावनीभूय यमुनोदकनिर्विशेषत्वं प्रतिपद्यते। एवं परमपावने भगवति निवेशितं मद्वचनमेव वेदवचनवल्लोकमान्यं भवतीति संबोधनाभिप्रायः । अत एव गङ्गाप्रवाहपतितस्य रथ्योदकस्य गङ्गात्वमिव शिवे पतितस्यापि मद्वचनस्य अतिशोभनतया शिवत्वमेव संपन्नमित्यभिप्रेत्य शिवेन वचसेत्युक्तम् । तदेतच्चतुर्थपञ्चममन्त्रद्वयं मिलित्वैको मन्त्रः। अस्य मन्त्रास्य गौतम ऋषिः । गायत्री छन्दः । रुद्रो देवता ।

सांग्रामिकेण वपुषा प्रविराजमानं
देवं पुरत्रयविनाशममन्दहासम् ।
दैत्यान्दिधक्षुमचलेश्वरचापपाणिं
ध्यायेत्पुरारिमथ भूमिरथाधिरूढम् ॥

एताभ्यां मन्त्राभ्यामकालमरणपरिहारादिर्भवति । एकविंशतिदिनानि निरन्तरजपात्पुरश्चरणासिद्धिः ॥ इति पञ्चमः ॥ ५ ॥

नन्वेवं नमस्कारस्तोत्राभ्यां मयि प्रसादितेऽपि वैवस्वतचित्रगुप्तादीनामतिदुर्दान्तानामन्येषां च त्वदीयपापसाक्षिभूतानामन्येषां देवानां सत्वेन कथं तवानिष्टपरिहारः स्यादित्याशङ्क्य त्वत्प्रसादे सति ते सर्वेऽप्यकिंचित्करा इत्याह अध्यवोचदिति ।

पक्षपातवचनमधिवचनम्। यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयादिति श्रवणात्। तथा चायमर्थः। अधिवक्ता भक्तेभ्योऽधिवचनस्वभावः। प्रथमः प्रधानभूतः श्रेष्ठ इति यावत्। दैव्यो देवेषु भवो देवान्तर्यामीत्यर्थः। भिषक् पापरोगसंसारदारिद्र्यादिसकलव्यसनाचिकित्सकः। भिषक्तमं त्वा भिषजां शृणोमीति श्रुतेः। एवंविधो भगवानध्यवोचत् अधिब्रवीतु। छन्दसि लुङिति लोडर्थे लुङ्। मदीयोऽयमिति पक्षपातं करोत्वित्यर्थः। किं कुर्वन्। सर्वानपि अहीन् सर्पवृश्चिकचोरव्याघ्रादीन्प्रत्यक्षहिंसकान्। सर्वाश्च यातुधान्यः। यातुधानजातीः रक्षःपिशाचाद्यपस्माररूपाः परोक्षाहिंसिकाः। जम्भयन्नाशयन्। अध्यवोचादिति। अतः सर्वसमस्य भगवतः कथं त्वयि पक्षपातवचनम्। तथा सति वैषम्यनैर्घृण्यप्रसङ्ग इति शङ्कापरिहारार्थमधिवक्तेत्युक्तम्। भक्तेष्वधिवचनं हि भजनकर्मप्रयुक्तम्। अतो नेश्वरस्य दोषमावहति। वैषम्यनैर्घृण्ये न सापेक्षत्वादिति न्यायादिति भावः। सत्यपि भगवत्पक्षपाते वैवस्वतादिदेवतान्तरप्रयुक्तः पापफलानुभवः कुतो न स्यादिति शङ्कानिरासाय प्रथम इत्युक्तम्। यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः। तमीश्वराणां प्रथमं महेश्वरं तं देवतानां प्रथमं च दैवतम्। यो देवः सर्वदेवेषु महादेव इति स्मृतः। तस्मै नमस्तु कुर्वाणा दिवि तिष्ठन्ति देवता इत्यादिश्रुतिस्मृतीतिहाससहस्रावगतसर्वदेवताश्रेष्ठभावे भगवति मत्पक्षपातिनि सति न तदुपजीविदेवतान्तरप्रयुक्तदुःखशङ्कावकाश इति भावः। न केवलं मे देवतान्तरप्रयुक्तदुःखाभावमात्रं प्रत्युत सकलदेवतापूज्यत्वमपि यतस्तदन्तर्यामितया तदीयपूज्यताबुद्धिप्रेरको भगवान्मत्पक्षपाती जात इत्येतद्दैव्य इत्यनेन देवान्तर्यामित्ववाचिना दर्शितम्। भिषगित्यनेन निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः न किंचिदत्र नैर्घृण्यं घृणैवात्र प्रयोजिकेति शिवपुराणोक्तभिषग्दृष्टान्तदर्शनेनोपपादितं भगवतः परमकारुणिकत्वमुक्तम्। तेन च अहियातुधानीर्हिंसतस्तद्विषयेऽपि दयालुत्वमेव प्रदर्शितं भवति। यथा व्रणवैद्यः क्षारच्छेददाहादिभिर्व्रणिनस्तात्कालिकदुःखकरोऽपि व्रणनिवारणेन तं सुखयन्दयालुरेव तथा संसारवैद्यः परमेश्वरोऽप्यहियातुधानीर्हिंसन्नपि तदीयक्रूरजन्महेतुदुरितनिवारणेन ताननघान्कृत्वा क्रमेण सुखं करोतीति न तस्य दयालुत्वक्षतिरिति। अधिब्रुवञ्जम्भयत्वित्यनुक्त्वा जम्भयन्नध्यवोचदित्युक्त्या भगवतो निरङ्कुशमीश्वरत्वं प्रदर्शितम्।

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ॥ ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे ॥ ७ ॥

---

अहियातुधानीनां तत्प्रेरकमृत्युदेवतानां च निग्रहे स्वयमशक्तश्चेत्खलु मदीयोऽयमिति तदनुनयपूर्वकमहियातुधानीभ्यः प्रणतं मोचयन्भगवानधिब्रुवञ्जम्भयत्विति प्रार्थ्यते। न त्वेवम्। किं तु स्वयं तच्छक्तः प्रथममहियातुधानीनाशनेन प्रणतं पालयन्देवैरागत्य कथमयं पापिष्ठः पाल्य इति पृष्टे मदीयोऽयं कुतोऽस्य पापमिति पक्षपातवचनं करोति। अत एव महापातकिनः किरातादीन्निनीषितो यमभटान्निजदूतैर्घातयित्वा परमेश्वरेण तेषु कैलासमानीतेषु यमचित्रगुप्तादिभिस्तद्वृत्तान्ते विज्ञापिते तान्प्रति भगवता यदृच्छयाऽपि मयि बिल्वदलक्षेपप्रणामादिकमाचरितवन्तो मदीयाः। तस्मान्नैतेषु भवतामधिकारोऽस्तीत्युक्तमिति पुराणेषु बहुशः कथा जोघुष्यते। तदेतदभिप्रेत्याग्रे रक्षा च नो अधि च देव ब्रूहीति प्रथमं रक्षणं पश्चादधिवचनं प्रतिपादयतीति। सोऽयं मन्त्रो विषज्वररक्षःपिशाचादिनिखिलपीडानिवर्तकः। अत एव कवचमित्यस्य नामधेयम्। यदाह भगवान्बौधायनः अध्यवोचदिति कवचमिति। अस्य मन्त्रस्य कण्व ऋषिः। अनुष्टुप्छन्दः। शंभुर्देवता।

चन्द्रार्धमौलिं कालारिं व्यालयज्ञोपवीतिनम्।
ज्वलत्पावकसंकाशं ध्यायेद्देवं त्रिलोचनम् ॥

पञ्चायुतजपादस्य पुरश्चरणस्य सिद्धिः ॥ इति षष्ठः ॥ ६ ॥

इत्थं षड्भिर्मन्त्रैः परमेश्वरः प्रसाद्य प्रार्थितः। इदानीमखिलकर्मसाक्ष्यादित्यात्मा भगवान्द्वाभ्यां प्रसाद्य प्रार्थ्यते असौ यस्ताम्र इति।

यः पूर्वोक्तो भगवान्स एवासौ प्रत्यक्षं परिदृश्यमानः सूर्य इत्यर्थः। प्रत्यक्षं परिदृश्यमानमेव तद्रूपं विशेषणैर्दर्शयति। ताम्रो अरुण उत बभ्रुः सुमङ्गलः। उदयकालेऽत्यन्तरक्तवर्णस्ताम्रः। तदनन्तरमीषद्रक्तोऽरुणः। तत ऊर्ध्वं पिङ्गलवर्णो बभ्रुः। यदाहुः पिङ्गलो नकुलश्चैव खलतिर्विष्णुरेव च। चत्वार एतैरुक्तैर्बभ्रवः समुदाहृता इति। स चान्धकारहिमादिवारणेन जगत्सौख्यहेतुत्वात्सुमङ्गलः। असाति ह्यादित्यरू

असौ योऽवसर्पति नीलग्रीवो विलोहितः ॥
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ॥ ८ ॥

---

पेऽस्मिन्भगवत्यन्धकारादिग्रस्तं जगदमङ्गलमेव स्यादिति भावः । एवंभूत आदित्यात्मा भगवान्रुद्रो ये चान्ये रुद्रा आदित्येन सहैकीभूता इमामभितोऽस्या भूमेः परितो दिक्षु श्रिताः परमेश्वरनियोगेन जनानां पुण्यपापानुरूपतयाऽनुग्रहं निग्रहं च कर्तुं प्राच्यादिदिक्षु स्थिताः । ते च सहस्रशः । अनेकसहस्रसंख्याकाः । सहस्राणि सहस्रश इत्यग्रे वक्ष्यमाणाः । एषामादित्यरूपाणां हेडो विहिताकरणनिषिद्धसेवानिमित्तक्रोधम् । अवेमहे स्तुतिनमस्कारादिभिरपनयामः । तेऽस्माकं प्रसन्ना भवन्त्वित्यर्थः ॥ इति सप्तमः ॥ ७ ॥

एवं सप्तमेन प्रसाद्याष्टमेनेष्टसिद्धिं प्रार्थयते असौ योऽवसर्पतीति॥

यो नीलग्रीवस्त्रिलोचनं नीलकण्ठमित्यादिश्रुतिप्रसिद्धः स एवासौ विलोहितो विशेषेण लोहितः सन्नवसर्पति प्रवर्तते । किमर्थं प्रवर्तते । तत्राह उतैनमिति । एनमादित्यरूपं परमेश्वरं गोपा उत अज्ञानां प्रथमोदाहरणभूता गोपालका अप्यदृशन्पश्यन्ति तथा अदृशन्नुदहार्यः। उदकस्य हारिका गोपालेभ्योऽप्यज्ञाः पश्यन्ति । कियदिति विभज्याभिधेयम् । उतैनं विश्वा भूतानि । गोमाहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति । तथा च सर्वानपि स्वदर्शनेनानन्दयितुमेव परमेश्वरः सूर्यात्माऽवसर्पति । श्रूयते हि उद्यन्तं वा एतꣳ सर्वाः प्रजाः प्रतिनन्दन्तीति । वेदान्तैकसमधिगम्यं तु सच्चिदानन्दाद्वैतरूपमातिदुर्विज्ञेयं कैलासादिवर्तिं सगुणरूपमुपासकैरेव दृश्यं न तु सर्वैः । अतः सर्वप्रत्यक्षमेनं सर्वोऽप्युपास्य कृतकृत्यो भवति। अहो महिमेति भावः। स तादृश आदित्यात्मा दृष्टोऽनुचिन्तितो नोऽस्मान्मृडयाति सुखयतु । एताभ्यां मन्त्राभ्यामादित्यात्मा भगवानुपस्थेय इति ब्राह्मणम् । अत्र असौ यस्ताम्र इत्यस्य आस्तारपङ्क्तिश्छन्दः । असौ योऽवसर्पतीत्यस्य षट्पदा जगती छन्दः। द्वयोरपि मरुत्वानृषिः। आदित्यरूपी भगवान्देवता ॥

मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् ॥
चण्डदीधितिमखण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम् ॥

उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥
नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥९॥

---

एवं कृच्छ्राचरणपूर्वकं षोडशदिनेषु निरन्तरजपात्पुरश्चरणसिद्धिः अनावृष्टिपरिहारकोऽयं मन्त्रः ॥ इत्यष्टमः ॥ ८ ॥

एवं सप्तमाष्टमाभ्यामादित्यरूपं प्रसाद्य नवमेन भूकैलासिनं श्रीनीलकण्ठमूर्तिं प्रसादयितुं नमस्करोति नमो अस्त्विति।

नीलग्रीवाय नीलकण्ठमूर्तये नमो अस्तु। कीदृशाय। सहस्राक्षाय। अपरिमितवाचकः सहस्रशब्दः। विश्वं शतं सहस्रं च सर्वमक्षयवाचकमिति स्मृतेः। सहस्रमक्षीणि यस्य तस्मै सहस्राक्षाय। अपरिच्छिन्नदृष्टय इत्यर्थः। अनेन कैलासवासिनोऽपि तवात्र मदीयनमस्कारो दृष्टिविषय इत्युक्तं भवति। पुनः कीदृशाय। मीढुषे प्रणतकामवर्षिणे। अनेन समस्तेष्टसिद्धिरूपनमस्कारफलप्रदत्वं दर्शितम्। नीलग्रीवायेत्यनेन च कालकूटग्रसनकृतनीलकण्ठत्वशालिने इत्यर्थेन गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छतीति प्रसिद्धो भगवन्महिमा स्मर्यते। तेन कालकूटविषतुल्यं दोषजालमन्तरेव नियम्य कलामात्रमपि गुणं शिरसा श्लाघमानः परमेश्वरः सुखोपास्यो व्यज्यते। एवं भगवन्तं नमस्कृत्य तत्पारिषदान्नमस्करोति अथो य इति। अथो अपि च अस्य नीलकण्ठमूर्तेः सत्त्वानः सदनशीलाः प्रत्यासन्ना प्रमथगणाः ये वर्तन्ते। प्रसिद्धा हि दिव्या गणा बहुरूपाः पुराण इति श्रुतिषु भगवतः पारिषदाः। सामवेदे च अधिपताइ क्षत्रपताइ इत्यादिना सर्वाधिपत्येनोक्ताः। भारतेऽपि सौप्तिके पर्वणि कामकारकराः सिद्धास्त्रैलोक्यस्यैश्वरेश्वराः। नित्यानन्दाः प्रमुदिता वागीशा वीतमत्सराः ॥ प्राप्याष्टगुणमैश्वर्यं येऽपि यान्ति न विस्मयम्। येषां विस्मयते नित्यं कर्मभिर्भगवान्भवः ॥ श्रुतेन ब्रह्मचर्येण तपसा च दमेन च। ये समासाद्य शूलाङ्कं भवसायुज्यमागता इति ॥ द्रोणपर्वणि च तस्य पारिषदा दिव्या नानारूपधराः प्रभोरित्यादिना प्रपञ्चिताः। पुराणेषु च परःसहस्रं तन्माहात्म्यवचनानि। तत्र सहस्राणि सहस्रश इत्यत्र कियदपि उदाहरिष्यते। एवमथो ये अस्य सत्त्वानः प्रमथगणा-

प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥१० ॥
अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे ॥
निशीर्य शल्यानां मुखा शिवो नः सुमना भव ११

---

स्तेभ्यो नमोऽकरं नमस्करोमि । अस्य मन्त्रस्य ऋषिर्देवता च भगवानेव । त्रिष्टुप्छन्दः ।

शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिम् ।
ध्यायेत्सिंहासनासीनमुमया सहितं शिवम् ॥

सुपुत्रावाप्तिप्रधानोऽयं मन्त्रः । पुरश्चरणविधिः सर्वोऽप्यर्णवे द्रष्टव्यः इति नवमः ॥ ९ ॥

अथ दशमादिषड्भिरायुधान्युपसंहारयितुं प्रार्थयते । यद्यपि शिवां गिरित्र तां कुरु मा हिꣳसीरित्यादिना पूर्वमेव प्रार्थितं तथाऽपि भयातिशयात्पुनः प्रार्थ्यते । अतो न पुनरुक्तिशङ्कावकाशः । प्रमुञ्चेति ।

हे भगवो भगवन् ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेति वचनोक्तसमग्रैश्वर्यादिषड्गुणसंपन्नम् मतुवसो रु संबुद्धौ छन्दसीति रुत्वम् । धन्वनस्त्वदीयधनुषः संबन्धिन्यौ ये आर्त्नी कोटी तयोः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च शिथिली कुरु । न हि समग्रैश्वर्यादिसंपन्नस्य तव धनुरन्यः कश्चिदवरोपयितुं शक्नोति । इमा रुद्राय स्थिरधन्वने गिर इत्यादि श्रुतेः । अतस्त्वमेव प्रसन्नो भूत्वा धनुरवततज्यं कुर्वित्यर्थः । एवं धनुषि अवरोपितेऽपि शराः कवलयन्त इव दृश्यन्ते । अतो हे भगवो भगवन् । याश्च ते तव हस्ते इषवो वर्तन्ते ताः परा वप पराङ्मुखीकुरु ॥ इति दशमः ॥ १० ॥

एवं पराङ्मुखीकरणमर्थयित्वा तावन्मात्रेण भयशान्तिमलभमान इषूणां कुण्ठिताग्रत्वमाशास्ते अवतत्येति ।

शतसहस्रशब्दावानन्त्यवाचिनौ । हे सहस्राक्ष अनन्तलोचन शतेषुधे अनन्ततूणीरेत्यर्थः । इषुधीनामानन्त्यादेव इष्वानन्त्यमप्युक्तं भवति ।

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत ॥
अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ १२ ॥

---

लोके हि परिमितदृष्टिः परिमिततूणीरश्च वेद्धा धानुष्को दृष्टिपथपरिहारे बाणव्यथे वा सति वेद्धुं न प्रभवतीति कथंचिदनुवर्तितुं शक्यः । त्वं तु अपरिच्छिन्नदृष्टिरपरिमितबाणो न कथंचिदनुवर्तितुं शक्य इति संबोधनद्वयस्वारस्यम् । अतो मदीयोपायदुष्परिहारेऽस्मिन्नर्थे त्वमेव धनुरवतत्यावरोपितज्याकं कृत्वा शल्यानां बाणानां मुखा मुखानि निशीर्य इषुधिषु न्यग्भावेन शीर्णानि कुण्ठताग्राणि कृत्वा एवंकृतेऽपि वेद्धरि क्रूरे सति मनो न विश्राम्यति । अतो विशिनष्टि शिव इति । सौम्याकार इत्यर्थः । हार्दं विना बहिः सौम्याकृतित्वमात्रं न विस्रम्भपदमित्यतः सुमना भवेति । शरणागतोऽयमनुग्राह्य इति दयामृतशीलो भवेत्यर्थः । इत्येकादशः ॥ ११ ॥

इदानीं कुण्ठताग्राणामपि बाणानामदर्शनं प्रार्थयन्नाह विज्यामिति । कपर्दिनः परमेश्वरस्य धनुर्विज्यं विज्याकमस्त्विति शेषः । बाणवान् उत । इषुधिरपि विशल्यो विगतबाणोऽस्तु । इषुधेर्विशल्यत्वेऽपि अन्यत्र स्थितैः शल्यैर्वेधमाशङ्क्याह अनेशन्निति । अस्य कपर्दिन इषवोऽनेशन्वेद्धुमसामर्थ्यरूपं विनाशं प्राप्नुवन्तु । नशेराशिषि च्छन्दसि लङ् । किं चास्य निषङ्गथिः खड्गकोश आभुरीषत्प्रभुरस्तु खड्गं धारयितुमेव समर्थः । न तु खण्डनार्थं खड्गाकर्षणपर्यन्तकार्यक्षम इत्यर्थः । अत्र प्रमुञ्चधन्वन इत्याद्यास्त्रय एको मन्त्रः । अस्य तृचस्य नारद ऋषिः । अनुष्टुप्छन्दः । श्रीरुद्रो देवता ।

उद्यद्भास्करकोटिप्रकाशमादीप्तदहनधामानम् ।
भीषणभुजङ्गभूषं ध्यायेद्विविधायुधं रुद्रम् ।
अनेन शत्रवो नश्यन्ति । इति द्वादशः ॥ १२ ॥

एवं त्रिभिर्मन्त्रैरायुधोपसंहारमर्थयित्वा तैरिदानीमात्मरक्षणमाशास्ते या ते हेतिरिति ।

हे मीढुष्टमातिशयेन भक्तकामवर्षिन्निति हेतुगर्भं संबोधनम् । या ते तव हेतिः खड्गाद्यायुधम् । यद्यपि ते हस्ते धनुर्बभूव भवति । तयाऽयक्ष्मया भक्तारोग्यहेतुभूतया हेत्या ते तव धनुषा चेत्यपि द्रष्टव्यम् । त्वम

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ॥
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिब्भुज ॥ १३ ॥
नमस्ते अस्त्वायुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥१४॥
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ॥ १५॥

---

स्मान्विश्वतः सर्वस्माद्दुरितात्परिब्भुज परिपालय। इति त्रयोदशः ॥१३॥

अथैवं प्रार्थ्य पुनर्नमस्करोति नमस्ते इति ।

हे भगवन् । ते तवायुधाय नमोऽस्तु । कीदृशाय । अनाततय प्रहर्तुं व्यापृतमाततं तदन्यदनाततं तस्मै धृष्णवे स्वरूपेण हर्तुं समर्थाय । उत किं च । ते तवोभाभ्यां बाहुभ्यां नमोऽस्तु। बाहुभ्यामिति द्विवचनेनैव द्वित्वे सिद्धेऽपि वेद्धुमुद्यतं बाहुद्वयमुपलभ्य भयातिरेकादुभाभ्यामिति पुनर्ब्रवीति । तथा तव धन्वने नमोऽस्तु । इति चतुर्दशः ॥ १४ ॥

अथ नमस्कृत्य पुनः प्रार्थयते परि ते धन्वन इति ।

हे भगवन् ।ते धन्वनो धनुषः संबन्धिनी धनुष्यारोपितेति यावत् । एतादृशी या हेतिर्बाणरूपमायुधं सा हेतिरस्मान्विश्वतः सर्वस्मादुपद्रवात्परिवृणक्तु परिवर्जितान्करोतु रक्षत्वित्यर्थः। कथं पुनः पापराशौ विद्यमाने तवोपद्रवपरिहारः स्यात् । तत्राह अथो अपि च यस्तवेषुधिर्यत्र तीक्ष्णा इषवस्तिष्ठन्ति तमस्मदस्माकं संनिधाने आरे अरीणां समूहे पापराशौ निधेहि स्थापय नाशयेत्यर्थः। इति पञ्चदशो मन्त्रः। अत्र या ते हेतिरित्यादितृचस्य अनुष्टुप्छन्दः ऋषिर्देवता च भगवानेव ।

प्रणमदमरसंघमौलिमालाकुसुमरजोरुणपादपद्मयुग्मम् ।
अनवरतमनुस्मरेद्भवान्या सह जगतां पितरं पिनाकपाणिम् ॥
शत्रुनाशप्रधानोऽयं मन्त्रः । इति प्रथमोऽनुवाकः ॥१ ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः ॥१॥

## ॥ द्वितीयोऽनुवाकः ॥

तदेवं प्रथमेऽनुवाके पञ्चदशभिर्मन्त्रैर्भगवान्सपरिकरः प्रसाद्य वर्णितः। अथेदानीं द्वितीयाद्यैरष्टभिरनुवाकैः सर्वेश्वरत्वसर्वान्तर्यामित्वरूपेण भगवन्तं नमस्करिष्यन्प्रथमं सर्वेश्वरत्वेन नमस्करोति। एतदारभ्य श्वभ्यः श्वपतिभ्यश्च वो नम इत्यन्तं सर्व एवोभयतो नमस्कारा एते मन्त्राः। सर्वत्र च नमआदिर्नमोऽन्त एकैको मन्त्रः॥ यथा नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम इति। एवमग्रेऽपि। तत्र तावत्प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनपूर्वकं भगवतः सर्वेश्वरत्वमुपपादयन्नमस्कर्तुमारभते नमो हिरण्य बाहव इति।

हिरण्यबाहवे हिरणमयकेयूराद्यलंकृतबाहवे। बाहुग्रहणं चोपलक्षणम्। आपादमस्तकमतिदिव्यकनकखचितभूषणतया स्वरूपेण च सर्वोऽपि कनकवर्ण एव दिव्यमङ्गलविग्रह इति हि श्रुतयः प्रथयन्ति। यथा नमो हिरण्यबाहवे हिरण्यवर्णाय आप्रणखात्सर्व एव सुवर्णः। यदापश्य पश्यते रुक्मवर्णमित्याद्याः। रुक्माभं स्वप्नधीगम्यं चारुचामीकराभासमित्याद्याः स्मृतयोऽपि। सेनान्ये सेना नयतीति सेनानीः। देवासुरसिद्धगन्धर्वमनुष्यादिसंघातरूपनानासेनापतिः। उक्तं हि आश्वलायनेन शिवं प्रस्तुत्य सर्वाणि ह वा एतस्य नामधेयानि सर्वाश्च सेनाः सर्वाणि चोच्छ्रयणानीति तस्मै सेनान्ये। तथा दिशां प्राच्यादीनां पतये स्वामिने नमोऽस्तु। षष्ठीयुक्तश्छन्दसि वेति घिसंज्ञा। अत्र दिशां पतये नम इति प्रथममन्वयः। तत्र कथं परमेश्वरस्य दिक्पतित्वम्। इन्द्राग्न्यादीनामेव तथात्वादिति शङ्कानिरासाय सेनान्ये इति विशेषितम्। तेन सकलदेवतासङ्घाधिपतेः परमेश्वरस्यैव दिगाधिपत्यम्। इन्द्रादयस्तु तदाज्ञया तत्तद्दिगधिष्ठातार इति प्रदर्शितम्। परमेश्वरस्य इन्द्राद्याधिपत्यं कथमित्याकाङ्क्षायां हिरण्यबाहव इति विशेषितम्। तेन हि य एषोऽन्तरादित्ये हिरण्मयः पुरुष इत्यन्तरादित्यविद्योपास्यं पारमेश्वररूपमुच्यते। अत एव नमो हिरण्यबाहव इत्यस्यान्तरादित्यविद्योपासने पुराणादिषु विनियोगः कृतः। य एवामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च य अन्तरादित्यविद्याया अस्याः फलस्वर्गादिलोकतद्भोगैश्वर्यादिदाय

नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः ॥२॥

---

परमेश्वररूपमुपस्थापयता हिरण्यबाहव इत्यनेन स्वर्गतद्भोगादीनिन्द्रादिभ्यः प्रयच्छतस्तस्य तदधिपतित्वं युक्तमिति प्रदर्शितं भवति। प्रसिद्धं च परमेश्वरस्य श्रुत्यादिष्विन्द्राद्याधिपत्यम् । यथा सर्वमिदं ब्रह्माविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते । कारणं तु ध्येयः। सर्वैश्वर्यसंपन्नः शंभुरिति। भीषास्मादग्निश्चेन्द्रश्चेत्यादयः । इतिहासपुराणेषु च । यथा भारते स ददाति मनुष्येभ्यः स एवाऽऽक्षिपते पुनः। शक्रादिषु च देवेषु तस्यैश्वर्यमुच्यत इति ॥ भागवतेऽपि ब्रह्मादयो यत्कृतलोकपाला इति। शिवपुराणेषु च प्रपञ्चितम्। तदेवमिन्द्रादिलोकपालविशिष्टसकलदिक्पतित्वेन परमेश्वरनमस्कारः प्रथममन्त्रार्थ इति ॥ १ ॥

अथ द्वितीयो नमो वृक्षेभ्य इति।

अत्र पशूनां पतय इति प्रथममन्वयः। पशुपदं चेह न गवादिमात्रपरम्। किं तु द्विपाच्चतुष्पात्साधारणप्राणिमात्रपरम्। येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदामिति। एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्चेत्यादिश्रुतेः। तथा च सकलप्राण्यधिपतये इत्यर्थो भवति। तत्र कथं प्राणिनामीश्वरं प्रति पशुत्वं कथं च भगवतस्तत्पतित्वमित्याकाङ्क्षायां तदुपपादनाय वृक्षेभ्यो हरिकेशेभ्य इत्युक्तम्। अत्र हरितवर्णाः केशाः पलाशरूपा येषां तेभ्यो वृक्षेभ्यो रुद्ररूपेभ्यो नमः। तथा पशूनां पतये च नम इति प्राचीनव्याख्यानमनेन निरस्तम्। अस्मिन्पक्षे वृक्षपदस्य पाशुपत्योपपादकत्वाभावात्पशूनां पतय इत्यनेन सह न संबन्धः। नापि सर्वेश्वरत्वप्रकरणे वृक्षात्मत्वप्रतिपादनसंगतिः। न वा हरिकेशेभ्य इति विशेषणस्य किंचित्प्रयोजनम्। अग्रे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्तारायेति वृक्षात्मकत्वस्य वक्ष्यमाणत्वात्पुनरुक्तिः। अतोऽत्रार्थविशेषेण भवितव्यम्। तमेनं दर्शयामः। वृक्षपदमिह संसारवृक्षपरम्। ऊर्ध्वमूलमवाक्शाखम्। वृक्षं यो वेद संप्रति। अहं वृक्षस्य रेरिवेत्यादिश्रुतेः। अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमिति स्मृतेश्च। अत्रापि भवस्य हेत्यै जगतां पतये नम इत्यग्रेतनमन्त्रे परमेश्वरस्य संसारच्छेदकायुधत्वोक्त्या संसारस्य वृक्षत्वाविष्करणाच्च। हरिकेश-

पदमपि हरितवर्णत्वोपलक्षितत्रिगुणात्मककर्मकाण्डरूपपलाशलक्षणकेशवैशिष्ट्यपरम्। त्रैगुण्यविषया वेदाः। छन्दांसि यस्य पर्णानीति च स्मृतेः। यथा वृक्षस्य रक्षार्थानि पर्णानि भवन्ति तथा संसारवृक्षस्य रक्षार्थानि कर्मकाण्डात्मकानि च्छन्दांसि। तेषां संसाराभिवृद्धिकरकर्मप्रतिपादकत्वात्। तानि च शिरोरुहवदानन्त्यत्वात्केशत्वेन निरूपितानि। एवं च नमो वृक्षेभ्यो हरिकेशेभ्य इति मन्त्रभागस्य विविधकर्मजालानुविद्धसंसारवृक्षात्मकत्वेन परमेश्वरनमस्कारोऽर्थः पर्यवसितः। अनेन च कथं पशुत्वं कथं पतित्वमिति प्रश्नद्वयमुत्तारितं भवति। संसारपाशबद्धत्वेन प्राणिनां पशुत्वं तैः स्वकार्यकारयितृत्वेन परमेश्वरस्य तत्पतित्वमिति च तदर्थलाभात्। तदेतल्लैङ्गे स्पष्टमुपबृंहितम्। ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः। पशवः परिकीर्त्यन्ते संसारवशवर्तिनः॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः। ब्रह्मादिस्तम्बपर्यन्तान्पशून्बद्ध्वा महेश्वरः॥ पाशैरेतैः पतिर्देवः कार्यं कारयति स्वयम्। स एव मोचकस्तेषां भक्त्या सम्यगुपासित इति॥ एवं स्कान्दशैवकूर्मपुराणवचनान्यप्युदाहार्याणि। अत्र ब्रह्माद्याः स्थावरान्ता इत्युक्त्या येषामीश इति मन्त्रे द्विपाच्चतुष्पाद्ग्रहणं चेतनाचेतनात्मकसकलप्रपञ्चोपलक्षणमिति व्याख्यातं भवति। यथा गवाश्वमहिषादयस्तत्स्वामिभिः पाशैराबध्य स्ववशीकृत्य स्वाराधनरूपतया तदुपयोगितया वा स्वकीयेषु तत्तद्वस्तुषु तत्तद्वस्तुसामर्थ्याधीनेषु कर्मसु विनियुज्यन्त इति ब्रह्मादिस्थावरान्तानां पशुत्वं परमेश्वरस्य तत्पतित्वं चेत्याभिप्रायः। यत्पुनः श्रूयते सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति भगवतः पाशुपत्यं वरलब्धमिति। तत्तु अज्ञानमोहितो लोकः पशुपाशपशुपतीन्विवेक्तुमसमर्थतया स्वतो न मोक्तुं शक्त इति करुणया स्वकीयं पाशुपत्यं वरव्याजेन लोके स्पष्टीकृतमिति शिवपुराणेष्वेव स्वतःसिद्धं पतित्वं मे युष्माकं पशुताऽपि च। तदेतद्द्रढयाम्यद्य वरबन्धविनोदनैरित्यादिना व्याख्याताभिप्रायम्। युक्तं च संसारबन्धरूपपशुत्वस्यानादितया तद्बन्धकत्वरूपपतित्वस्याप्यनादित्वप्राप्त्या तस्य वरलब्धत्वोक्त्ययोगात्। न हि बन्धकं विना बन्धः संभवति। श्रुतिस्मृत्याद्युद्घोषितस्वतःसिद्धपरमेश्वरभावे भगवति पाशुपत्यवरणस्य तल्लाभस्य तं प्रति कस्यचिद्वरदातुश्च कथमपि विचारासहत्वाच्चेत्यास्तां तावत्॥ २॥

**नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः ॥३॥**

---

अथ तृतीयो नमः सस्पिञ्जरायेति ॥

सस्पिति बालतृणमुच्यते। पिञ्जर इति पीतरक्तः संकीर्णवर्णः। बालतृणवत्पिञ्जः सस्पिञ्जरः। तस्मै। त्विषीमते प्रकाशवते पथीनां पतये वैदिकतान्त्रिकमार्गाणां स्वामिने नम इत्यक्षरार्थः। अत्र त्विषीमत इत्यनेन ज्ञानरूपः प्रकाश उच्यते। तेन चेयं शङ्का निरस्ता भवति। एवं ह्यत्र शङ्काऽवतरति कथं परमेश्वरेण तान्त्रिकमार्गाः प्रदर्शिताः। या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य निष्ठा तेषां हि तामसीति तेषां निन्दितत्वादिति। अत्र चेदमुत्तरम्। सत्यमेव तान्त्रिकमार्गाणां निन्दितत्वम्। तत्तु वैदिकान्प्रत्येव। वेदबाह्यानां तु तान्त्रिकमार्गा एवोपकारकाः। तदेतदालोच्य सर्वज्ञेन परमेश्वरेण तन्त्राणि प्रणीतानि। यदि ह्येतानि न स्युस्ततो वेदबाह्याः पापिष्ठाः स्वतो वैदिकमार्गविमुखाः श्रेयःसाधनमन्यच्च शास्त्रमजानन्तः स्वेच्छाचारप्रावण्यविवशाः प्रणष्टा एव भवेयुः। अतस्तान्त्रिकमार्गप्रवर्तनमुचितमिति। तदेतत्कूर्मपुराणे स्पष्टमुपबृंहितम्। तत्र हि स तेषां मायया जातं गोवधं गौतमो मुनिः। केनापि हेतुना ज्ञात्वा शशापातीव कोपनः॥ भविष्यथ त्रयीबाह्या महापातकिनः समा इति वेदबाह्यत्वेन महापापिष्ठत्वेन च गौतमशापान्प्रस्तुत्य ते सर्वे प्राप्य देवेशं शंकरं विष्णुमव्ययम्। अस्तुवन्विविधैः स्तोत्रैरुच्छिष्टा इव सेवका इत्यादिना तेषां शंकरविष्णुसंनिधौ प्रार्थनामुपन्यस्य तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम्। विमोहनाय शास्त्राणि करिष्यावो वृषध्वज॥ एवं संचोदितो रुद्रो माधवेन मुरारिणा। चकार मोहशास्त्राणि केशवोऽपि शिवेरितः॥ कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम्। पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रश इत्यादीनां वेदबाह्यानां पापिष्ठानां रक्षणाय पाशुपतपाञ्चरात्रादितन्त्रमार्गः प्रवर्तित इत्युक्तम्। विमोहनायेत्यस्य चायमर्थः। अस्ति च पाशुपतपाञ्चरात्रादितन्त्रेषु वेदविरुद्धार्थप्रतिपादनम्। तथा केवलनिमित्तेश्वरवादो जीवोत्पत्त्यादिवर्णनं तद्विषये वेदनिन्दा चेति। तच्च सर्वमप्रमाणमेव। व्यवस्थापितं हि तदंशे तदप्रामाण्यं ब्रह्ममीमांसायाम्। तेषु च वेदनिन्दायास्तद्विरुद्धवर्णनस्य च प्रयोजनम्। ये वैदिका एव सन्तः पापवशाद्वेदेष्वविश्वासं कुर्वन्ति तान्विमोहयितुं तच्च विमोहनं तेषामनुग्रहायैव। ते हि वेद-

नमो॑ बभ्लु॒शाय॑ विव्या॒धिनेऽन्ना॑नां॒ पत॑ये॒ नमः॑ ॥४॥

द्विषस्तन्त्रेषु स्थितां वेदनिन्दामुपश्रुत्य बहुमन्यमाना वेदं विहाय तान्त्रिक-मार्गमनुप्रविश्य तेन विधिना परमेश्वरमाराध्य तत्पुण्यक्षतवेदद्वेषदोषाः क्रमेण जन्मान्तरे वेदनिष्ठां प्रतिपद्य कृतकृत्या भवन्ति। अत एव वैदिकस्यैव सतः शाण्डिल्यस्य वेदनिष्ठां विहाय पाञ्चरात्रादिदीक्षाविधिना विष्णुमाराधितवतो निन्दापूर्वकं तं प्रति चिराय वेदमार्गं गमिष्यतीति भगवता वासुदेवेन वरो दत्त इति वासिष्ठलैङ्गे श्रूयते। मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया। तया न प्रीतवानस्मि तव शाण्डिल्य ते प्रियः॥ कुमार्गेणापि शाण्डिल्य कृता पूजा मम त्वया। अतः कालेन महता वेदमार्गं गमिष्यसीति॥ पापिष्ठविषये परमेश्वरस्य मोहकत्वं तद्विषये द्वेष इव तदनुग्रहपर्यवसितत्वान्न दोषमावहति। अत एव खलु बुद्धाद्यवतारेषु भगवतो नारायणस्य विमोहकत्वं बहुशः प्रख्यायते। न हि तत्तस्य दूषणं भवतीति। तदेतत्सर्वमत्र विमोहनाय शास्त्राणीत्यनेनाभिप्रेतम्। एवमन्यान्यप्यस्मिन्विषये बहूनि वचनानि सन्ति तानि सर्वाण्यप्यस्माभिः पाषण्डगजकेसरिण्युदाहृतानि तत्रैव द्रष्टव्यानि। तदेवं वेदबाह्यानां रक्षणाय सर्वज्ञेन भगवता तान्त्रिकमार्गः प्रवर्तित इत्येतत्त्विषीमत इत्यनेन प्रदर्शितम्। तदुपरि कांश्चिद्वेदाधिकारिणः कांश्चिद्वेदबाह्यांश्च सृजतः परमेश्वरस्य वैषम्यनैर्घृण्यदोषमाशङ्क्य सस्पिञ्जरायेत्यनेन संकीर्णवर्णविशेषवाचिना तथाभूतत्रैगुण्यप्रधानत्वरूपार्थद्योतकेन तत्परिहृतम्। अनाद्यविद्योपचिततत्तद्गुणकर्मानुसारेण तथा सृजतो न वैषम्यादिप्रसक्तिः। पुण्यः पुण्येन कर्मणा पापः पापेनेत्यादिश्रुतेरिति भावः॥ ३॥

अथ चतुर्थो नमो बभ्लुशायेति।

बिभर्ति परमेश्वरमिति बभ्रुर्वृषभः। कुर्भ्रश्चेत्युणादिसूत्रेण भृञ्धातोः कुप्रत्यये द्विर्वचने धातोर्यणादेशे कित्वात् गुणवृद्धिप्रतिषेधे च सति बभ्रुरिति रूपनिष्पत्तिः। बभ्रौ शेते तिष्ठतीति बभ्रुशो वृषवाहनः। बभ्लुशायेति पाठे लकारे बभ्लुरेव बभ्रुरिति व्याख्येयम्। विशेषेण विध्यतीति विव्याधी। अन्नानामदनीयानां भक्ष्यभोज्यलेह्यचोष्यरूपाणां पदार्थानां स्वामी तस्मै नम इत्यर्थः। अत्र बभ्लुशायेत्यनेन धर्मरूपवृषभम-

नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥५॥
नमो भवस्य हेत्यै जगतां पतये नमः ॥६॥

---

धितिष्ठतोऽन्नस्वामित्वं युक्तम्। यज्ञाद्भवति पर्जन्यः। पर्जन्यादन्नसंभव इत्यन्तस्य धर्मकार्यत्वश्रवणादिति प्रदर्शितम्। विव्याधिने इत्यनेन ये अन्नेषु विविध्यन्ति येषामन्नमिषव इति च श्रुतेनान्नेनेषुणा विध्यतोऽन्नपतित्वमुचितम्। तन्नियम्यस्यैव तदिषुत्वादिति हेत्वन्तरम् ॥ ४ ॥

अथ पञ्चमो नमो हरिकेशायेति।

नीलालकमूर्धजसहितो हरिकेशः। नित्ययुवेति यावत्। उपवीती यज्ञोपवीतवान्। आदिब्राह्मणः। सामवेदे विरूपाक्षोऽसि दन्ताञ्जिरिति प्रस्तुत्य त्वं देवेषु ब्राह्मणोऽसि अहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति उप त्वा धावानीति प्रपदब्राह्मणश्रुतेः। आदिब्राह्मणमीशानमुपधावेन्न चेतरम्। ब्रह्मतेजोऽधिकं राजन्न क्षात्रं वैश्यसंभवम्॥ सर्वेषामधिको यस्माद्भगवान्ब्राह्मणः शिव इति पराशरसंहितादिवचनात्। पुष्टशब्दश्च देवेन्द्रादिपदप्रज्ञैश्वर्यादिपरिपूर्तिमद्वाची। ब्रह्मादिस्थावरान्तेषु ये ये पुष्टाः तेषां स्वामी पुष्टानां पतिस्तस्मै नम इत्यर्थः। अत्र आदिब्राह्मणस्य परमेश्वरस्य ब्रह्मादिसर्वोपास्यत्वावश्यंभावेन स्वोपासकांस्तान्पुष्टिदानेनानुगृह्णतस्तस्य पुष्टानां पतित्वमुपपन्नमित्येतदुपवीतिन इत्यनेन प्रदर्शितम्। स्वयं पुष्टः परस्मै पुष्टिं प्रयच्छति। परमेश्वरस्य नित्ययूनोर्देहेन्द्रियादिपुष्टिर्नित्यसिद्धेति लोकेभ्यस्तस्य तत्प्रदत्वमुचितमित्यौचित्यरूपं वस्तुसामर्थ्यं हरिकेशपदेन व्यज्यते ॥ ५ ॥

इत्थं पञ्चभिर्मन्त्रैर्दिगादिकतिपयवस्त्वाधिपत्यप्रदर्शनपूर्वकमीश्वरो नमस्कृतः। इदानीं प्रतिवस्त्वाधिपत्यवचनपूर्वकनमस्कारस्याशक्यतया जगत्पतित्वेन तं नमस्कर्तुं षष्ठो मन्त्रः प्रयुक्तो नमो भवस्येति।

भवः संसारः। तस्य च्छेदने हेतिरायुधम्। संसारवृक्षस्य च्छेत्तेत्यर्थः। स्थावरजङ्गमानां लोकानां स्वामी जगतां पतिस्तस्मै नमः। यद्यपि पशूनां पतये नम इत्यत्रैव ब्रह्मादिस्थावरान्तसकलजगत्पतित्वमुक्तं तथाऽपि संसारपाशबन्धहेतुत्वेन तदुक्तम्। अत्र संसारमोचकत्वेनेति भेदः। उभयोरपि ब्रह्मधर्मत्वात् ॥ ६ ॥

नमो॑ रु॒द्राया॑तता॒विने॒ क्षेत्रा॑णा॒ं पत॑ये॒ नम॑ः । ७ ।
नम॑ः सू॒ताया॑ह॒न्त्याय॒ वना॑ना॒ं पत॑ये॒ नम॑ः ॥ ८ ॥
नमो॒ रोहि॑ताय स्थ॒पत॑ये वृ॒क्षाणा॒ं पत॑ये॒ नम॑ः ॥ ९ ॥

---

अथोक्तमेव जगत्पतित्वमुपपादयितुं श्रमावधिधावनन्यायेन पुनरपि तत्तद्वस्त्वाधिपत्येन भगवन्तं नमस्कर्तुमारभते सप्तमादिभिर्नमो रुद्रायेति ॥

रुद्रः संसारदुःखद्रावकः । अत एव आततज्येन धनुषा अवति रक्षतीति आतताची । क्षेत्राणि शरीराणि । इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयत इति स्मृतेः । तेषां स्वामी क्षेत्राणां पतिस्तस्मै नम इत्यर्थः । लोके हि देशाधिपतिरुपद्रवेभ्यो देशवासिनो रक्षति तेषु च स्वाश्रितान्सुखविशेषेण संयोजयति । तथा क्षेत्राधिपतिः परमेश्वरोऽपि क्षेत्रस्थितान्रक्षति न ह्यन्यः परमेश्वराद्रक्षकोऽस्ति येन जातानि जीवन्तीति श्रुतेः । अत एव स्वल्वाशास्ते तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुजेति तदेतदाततात्विपदेनोक्तम् । जन्तोर्म्रियमाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवतीति श्रुतेः । क्षेत्रपदस्याविमुक्तादिक्षेत्रपरत्वे विशेषस्वारस्यं द्रष्टव्यम् ॥ ७ ॥

अथाष्टमो नमः सूतायेति ।

जगद्यन्त्रसारथिः सूतः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेति स्मृतेः ॥ हन्तुमशक्य इति अहन्त्यः । वनानामरण्यानां पतिः स्वामी तस्मै नम इत्यर्थः । तथा वनस्वामित्वे जगन्नियन्तृत्वरूपहेतुः सूतशब्देन प्रदर्शितः । जगन्नियच्छतोऽपि तद्विकारैर्नोपहतिरित्येतदहन्त्यपदेन ज्ञाप्यते च ॥ ८ ॥

अथ नवमो नमो रोहितायेति ।

लोहितवर्णो रोहितः स्थाता चासौ पाता चेति स्थपतिः । पृषोदरादिः । एवंभूताय वृक्षाणां पतये स्वामिने नम इत्यर्थः । अत्र स्थपतिशब्देन वृक्षस्वामित्वे हेतुरुच्यते । वृक्षेषु स्थित्वा वृक्षान्पालयतस्तत्स्वामित्वौचित्यात् । रोहितशब्देन वृक्षाधिष्ठातुः परमेश्वरस्य स्वरूपमुक्तं

नमो॑ म॒न्त्रिणे॑ वाणि॒जाय॒ कक्षा॑णा॒ं पत॑ये॒ नमः॑ ॥१०॥
नमो॑ भुव॒न्तये॑ वारिवस्कृ॒तायौष॑धीना॒ं पत॑ये॒ नमः॑ ११

---

भवति। ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिता इति हि वक्ष्यते। इति नवमः ॥ ९ ॥

अथ दशमो नमो मन्त्रिण इति।

वनगुल्मादयोऽतिगहनपदार्थाः कक्षास्तेषां स्वामी कक्षाणां पतिस्तस्मै नम इति प्रथममन्वयः। ननु अतिगहनेषु कथमीश्वरस्याधिपत्यं स्यात् दुरवगाहत्वादित्याशङ्क्य विशिनष्टि वाणिजायेति। वणिजां समूहो वाणिजः। यथा वणिक्सर्वजनपदव्यवहारान्परिच्छिद्य विशदीकरोति तथाऽयमपि सकलवस्तुजातमिति नास्य किंचिद्दुरवगाहमस्तीति भावः। कैमुतिकन्यायेनापि कक्षाणां पतित्वमुपपादयति। मन्त्रशब्देन सप्तकोटिमहामन्त्रास्तथा वेदरहस्यभूता उपनिषदः सर्वगुप्तवादाश्चाभिधीयन्ते। तेषां स्वामी मन्त्री धनस्वामी धनीतिवत्। न हि धनसंबन्धमात्रेण धनवोढारं धनीति व्यवहरन्ति। तथा च एवंविधेष्वपि गहनेषु यस्य स्वामित्वमीशानः सर्वविद्यानामित्यादिश्रुतिषूद्घुष्यते तस्य किमु वक्तव्यं कक्षाणां पतित्वं इति भावः। इति दशमः ॥ १० ॥

अथैकादशो नमो भुवन्तय इति।

भुवं तनोतीति भुवन्तिस्तस्मै। वारिवस्कृताय वरिवः परिचर्या। अस्य कर्तारो वरिवस्कृता भक्तास्तेषु तिष्ठतीति वारिवस्कृतः। सर्वगतस्यापि परमेश्वरस्य भक्तेषु सांनिध्यातिशयवशादियमुक्तिः। अत एव खलु यथाऽयोऽग्निसमावेशान्नायो भवति केवलम्। तथैव मम सांनिध्यान्न ते केवलमानुषाः ॥ शिवस्य परिपूर्णस्य किं नाम क्रियते नरैः। यत्कृतं शिवभक्तानां तच्छिवस्य कृतं भवेत् ॥ अकायो भक्तकायः स्यादिति पुराणवचनानि श्रूयन्ते। ओषधीनां व्रीह्यादीनां पतिः स्वामी तस्मै नम इत्यर्थः। अत्र भुवन्तय इत्यनेन ओषधिस्वामित्वे हेतुरुक्तो। सकलभूवलयस्रष्टृतया तत्स्वामिनः परमेश्वरस्य भूविकारौषधिस्वामित्वस्यापि तत एव प्राप्तेः। वारिवस्कृतायेत्यनेन च भक्तकायस्थत्वोक्त्या नाहं तथाऽग्नि यजमानहविर्विताने च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन। यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैरिति

॥ नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः॥ १२ ॥
नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः ॥१३॥

---

भगवतोक्तं भक्तमुखेन भगवतो भोक्तृत्वमाविष्कृतम् । तेन चौषधिफलभोक्तृत्वेनापि परमेश्वरस्यौषधिस्वामित्वं तत्फलभोक्तुस्तत्स्वामित्वौचित्यादित्युक्तं भवति । एवं परमेश्वरभोजनरूपत्वातिशयमभिप्रेत्यैव उपासकैः कृतमेव मे भोजनं नान्यैः कृतमिति श्रुतिस्मृत्यादिभिराम्नायते । अन्तरिच्छति जनो रुद्रं परमो मनीषया गृह्णाति जिह्वया रसं केवलाघो भवति केवलादीत्याद्याः श्रुतयः । अन्तरिच्छति यो रुद्रं सदा वन्द्यं मनीषया। गृह्णाति जिह्वया सोऽन्नं रसपूर्णामृतोदकम् ॥ अन्तर्नेच्छन्ति ये रुद्रं भवान्या सहितं भवम् । पुरीषमेव गृह्णन्ति जिह्वया ते न संशय इत्यादिपराशरपुराणवचनानि । इत्येकादशः ॥ ११ ॥

अथ द्वादशो नम उच्चैर्घोषायेति ।

युद्धादिषु उच्चैरुच्छ्रितो घोषो यस्य स उच्चैर्घोषस्तस्मै आक्रन्दयते वैरिणां रोदयित्रे तन्नाशकायेति यावत् । पत्तीनां पदातीनां स्वामिने नम इत्यर्थः । अत्र पत्तीनां पतये इत्यनेन पदातिसापेक्षमीश्वरस्य शौर्यमिति प्राप्ते तन्निवारणाय स्वयमेव शत्रुनाशने सामर्थ्यं दर्शयितुमाक्रन्दयत इत्युक्तम्। स्वयं शत्रुनाशनेऽपि नायुधाद्यपेक्षा किं तु हुंकारमात्रेण तादिति दर्शयितुमुच्चैर्घोषायेत्युक्तम् । तथा च आयुधपरिवारादिकमलंकारमात्रम्। हासवीक्षणनखादिभिस्त्रिपुरमन्मथयमादीन्नाशितवतस्तदपेक्षाविरहादिति भावः ॥ इति द्वादशः ॥ १२ ॥

अथ त्रयोदशो नमः कृत्स्नवीतायेति ।

कृत्स्नं जगद्वीतमधिष्ठानतयाऽन्तर्यामितया च व्याप्तं येन स कृत्स्नवीतस्तस्मै धावते भक्तान्रक्षितुं पृष्ठतोऽनुव्रजते । वत्सं गौरिव गौरीशो धावन्तमनुधावतीति वचनात् । सत्त्वनां सात्त्विकानां पतये स्वामिने नमः । अत्र सत्त्वनां पतित्वे धावते इत्यनेन हेतुरुक्तः । गोवत्सन्यायेन पृष्ठतोऽनुव्रज्य सात्त्विकान्रक्षतस्तत्स्वामित्वौचित्यात् । कृत्स्नवीतायेत्यनेन तदेव धावनमुपपाद्यते सर्वव्यापिना सर्वतो भक्ताननुधावितुं शक्यत इति । इदमेव खलु कृत्स्नवीतत्वेन भगवतः सर्वतो रक्षकत्वं वाजसनेयिनां गृह्ये श्रूयते--अपः प्रवेक्ष्यन्ननुमन्त्रयते 'नमो रुद्राया-

॥ नमः सहमानाय निव्याधिने
आव्याधिनीनां पतये नमः ॥ १ ॥
नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः ॥२॥

---

प्सुषदे स्वस्ति मा संपारयेति पन्थानं गच्छन्ननुमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारयेति वनं प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारयेति । तस्माद्यत्किंचित्कुर्वन्स्यात्तत्सर्वं नमो रुद्रायेति कुर्यात्सर्वेषु रुद्र इति श्रुतेरिति । सोऽयं द्वितीयानुवाक एको मन्त्रः । अस्य च मण्डूक ऋषिः । महागायत्री छन्दः । श्रीरुद्रो देवता।

मुक्तालंकृतसर्वाङ्गामिन्दुगङ्गाधरं हरम् ।
ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया ।

शत्रुनाशनवशीकरणाद्यैश्वर्यलाभप्रधानोऽयं मन्त्रः । इतिद्वितीयोऽनुवाकः ॥ २ ॥

तृतीयोऽनुवाकः ॥ अथ द्वितीय इव तृतीयेऽप्यादावष्टाभिर्मन्त्रैः सर्वेश्वरत्वेन भगवान्नमस्क्रियते । तत्र प्रथमो नमः सहमानायेति ।

सहमानाय शत्रूनभिभवते । यद्वा भक्तापराधान्क्षममाणायेत्यर्थः । नितरां विध्यतीति निव्याधी तस्मै आ समन्ताद्विध्यन्तीति आव्याधिन्यः शूरसेनास्तासां स्वामिने नमः । अत्र आव्याधिनीनां पतित्वे सहमानाय निव्याधिन इति हेतुगर्भे विशेषणे । विध्यतां मध्ये नितरां विध्यतो निखिलपरिभवशक्तस्य च श्रेष्ठत्वेन तथाविधस्य तत्स्वामित्वौचित्यात् । सहमानपदस्य भक्तापराधसहमानार्थत्वे तु तस्येत्थं स्वारस्यं द्रष्टव्यम् । ननु यदि परमेश्वरः सर्वापेक्षया स्वयमतिशयेन वेधकृदाव्याधिनीनां पतिस्तर्हि लोकाः सर्वेऽपि दत्तजलाञ्जलय इव स्युः पापरहितस्य कस्याप्यभावेन प्राणिमात्रस्यापराधितया परमेश्वरवध्यत्वस्यापरिहार्यत्वादित्याशङ्क्य भक्तापराधसहनस्वभावे भगवति नेयं शङ्केत्याह सहमानायेति । इति प्रथमः ॥ १ ॥

अथ द्वितीयो नमः ककुभायेति ।

ककुभाय महते निषङ्गिणे खड्गवते स्तेनानां गुप्तचोराणां स्वामिने नमः । अत्र ककुभशब्दवाच्यमहत्त्वस्य प्रतियोग्याकाङ्क्षायां स्ववाक्यो-

नमो॑ निष॒ङ्गिणे॑ इषुधि॒मते॒ तस्क॑राणां॒ पत॑ये॒ नमः॑॥३॥
नमो॒ वञ्च॑ते परि॒वञ्च॑ते स्तायू॒नां पत॑ये॒ नमः॑॥ ४ ॥
॥ नमो॑ नि॒चेर॑वे परि॒च॒रायार॑ण्याना॒ं पत॑ये॒ नमः॑॥५॥
॥ नमः॑ सृका॒विभ्यो॒ जिघा॑ꣳसद्भ्यो
मुष्ण॒तां पत॑ये॒ नमः॑॥ ६ ॥

---

णात्तस्तेनानामेव तत्प्रतियोगित्वेनान्वयः । तथा च स्तेनेषु महत्त्वं स्तेनस्वामित्वे हेतुः ककुभायेत्यनेन चोच्यते । निषङ्गिण इत्यनेन स्तेनक्रियापेक्षितोपकरणसंपत्तिः प्रदर्श्यते । इति द्वितीयः ॥ २ ॥

अथ तृतीयो नमो निषङ्गिण इति ।

धनुषि संधातुं हस्ते धृतो बाणो निषङ्गः पृष्ठे बद्धो बाणाधार इषुधिस्तदुभययुक्ताय तस्कराणां प्रकाशचोराणां स्वामिने नमः । अत्र तस्कराधिपत्यानुगुणरूपप्रदर्शनार्थत्वेन विशेषणे संगमयितव्ये । इति तृतीयः ॥ ३ ॥

अथ चतुर्थो नमो वञ्चत इति ।

ये स्वकीया एव भूत्वा अन्यैरज्ञाताः सन्तो द्रव्यमपहरन्ति ते स्तायवस्तेषां स्वामिने नमः । देवस्य स्तायुस्वामित्वमुपपादयितुं वञ्चते परिवञ्चत इति विशेषणे । स्वामिन आप्तो भूत्वा तदीयद्रव्यक्रयविक्रयादिव्यवहारेषु यत्र कुत्रापि यत्किंचिद्द्रव्यापहारी वञ्चन्नित्युच्यते तद्रूपायेत्यर्थः । इति चतुर्थः ॥ ४ ॥

अथ पञ्चमो नमो निचेरव इति ।

अरण्येषु वर्तमानाश्चोरा अरण्यास्तेषां स्वामिने नमः । एतदेवोपपादयति नमो निचेरवे परिचरायेति । आरण्यकचोरापेक्षयाऽप्यपहारविषये नितरां संचरणशीलो निचेरुः । एवं तदपेक्षया परितोऽपहर्तुं संचरणशीलः परिचरः । तादृशस्य तेषु श्रेष्ठत्वात्तत्स्वामित्वं युक्तमिति भावः । इति पञ्चमः ॥ ५ ॥

अथ षष्ठो नमः सृकाविभ्य इति ।

सृकेण यन्त्रेणाऽऽत्मानमवन्तीति सृकाविणः प्राणिनो हन्तुमिच्छन्तो

नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमः ॥ ७ ॥

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ॥ ८ ॥

॥ नम इषुमद्भ्यो धन्वाविद्भ्यश्च वो नमः ॥१॥

---

जिघांसन्तस्तदुभयरूपाय मुष्णतां केदारादिषु धान्यचोराणां स्वामिने नमः। अत्रापि मुष्णतां पतित्वं समये स्वरक्षणचतुरस्य तद्विरोधिनो जिघांसत एव भवतीति विशेषणद्वयम्। बहुवचनं छान्दसम्। अन्यथा विशेषणविशेष्यभावायोगात्। एवमुत्तरत्रमन्त्रेऽपि। इति षष्ठः ॥ ६ ॥

अथ सप्तमो नमोऽसिमद्भ्य इति।

असिमन्तः खड्गधारिणो नक्तंचरन्तो रात्रिचरास्तद्रूपायेत्यर्थः। हत्वैवापहरन्तश्चोराः प्रकृन्तास्तेषां स्वामिने नमः। अत्र प्रकृन्तस्वामित्वानुगुणस्वरूपप्रदर्शनाय विशेषणद्वयम् ॥ इति सप्तमः ॥ ७ ॥

अथाष्टम उष्णीषिण इति।

कुं भूमिं गृहक्षेत्रादिरूपां लुञ्चन्त्यपहरन्तीति कुलुञ्चास्तेषां स्वामिने नमः। द्विविधाः कुलुञ्चा ग्रामेषु स्थित्वा उष्णीषिणो दुष्प्रवर्तकतया दुर्बलानां क्षेत्राद्यपहर्तारः केचित्। केचित्तु गिरिवनाद्याश्रयेण बलिष्ठाः सन्तो लोकानां क्षेत्रादीनपहरन्ति तदुभयरूपत्वमुष्णीषिणे गिरिचरायेति विशेषणाभ्यां क्रमेण प्रदर्शितम्। तादृशस्य कुलुञ्चस्वामित्वं युक्तमिति भावः ॥ ८ ॥

तदेवं नमो हिरण्यबाहव इत्यादिभिरेतदन्तैरेकविंशत्या मन्त्रैर्दिगाद्येकैकवस्त्वाधिपत्यप्रदर्शनेन जगतां पतये नम इति साक्षाच्च कण्ठरवेण भगवत एष सर्वेश्वर एष लोकाधिपतिरिति श्रुतिप्रसिद्धमखिलजगदीश्वरत्वमुक्त्वेदानीमेकैकवस्त्वात्मकत्वेन भगवतः सर्वात्मकत्वं वर्णयन्नमस्कर्तुमारभते नम इषुमद्भ्य इत्यादिना।

लोकानवितुमिषून्धनुश्चाहवे हस्ते वहन्त इषुमन्तो ध[illegible]। ते च देवासुरमनुष्यरूपेण जगति यावन्तो वर्तन्ते तद्रूपेभ्यो वो [illegible] नमः।

नम॑ आतन्वानेभ्यः॑ प्रति॒दधा॑नेभ्यश्च वो॒ नमः॑ ॥२॥
नम॑ आ॒यच्छ॑द्भ्यो विसृ॒जद्भ्य॑श्च वो॒ नमः॑ ॥ ३ ॥
नमो॑ऽस्य॑द्भ्यो॒ विध्ये॑द्भ्यश्च वो॒ नम॑ ॥ ४ ॥
नम॒ आसी॑नेभ्य॒ः शया॑नेभ्यश्च वो॒ नमः॑ ॥ ५ ॥
नमः॑ स्व॒पन्द्भ्यो॒ जाग्र॑द्भ्यश्च वो॒ नमः॑ ॥ ६ ॥
नम॒स्तिष्ठद्भ्यो धाव॑द्भ्यश्च वो॒ नमः॑ ॥ ७ ॥
नमः॑ स॒भाभ्यः॑ स॒भाप॑तिभ्यश्च वो॒ नमः॑ ॥ ८ ॥
नमो॒ अश्वे॒भ्योऽश्व॑पतिभ्यश्च वो॒ नमः॑ ॥ ९ ॥

---

परमेश्वरांशानां वस्तुतस्तदभिन्नानां च घोरतररुद्राणां बहुत्वात्तत्सं-बोधनाभिप्रायेण व इति बहुवचनम् । तथा च असह्या ह्येते घोरतरा-रुद्रा उभयतो नमस्काराः । अथैते शान्ततरा रुद्रा ये अन्यतोनमस्कारा इति । अथ द्वितीयो नम आतन्वानेभ्य इति ।

धनुषि ज्यामारोपयन्त आतन्वानाः । आततज्ये धनुषि शरान्संदधानाः प्रतिदधानाः । ते च जगति यावन्तस्तद्रूपेभ्यो वो नम इति पूर्ववत् ॥२॥

अथ तृतीयो नम आयच्छद्भ्य इति ।

ज्याकर्षणं कुर्वन्त आयच्छन्तः । आकृष्य बाणान्मुञ्चन्तो विसृजन्तः । शेषमत्र पूर्ववद्द्रष्टव्यम् ॥ ३ ॥

अथ चतुर्थो नमोऽस्यद्भ्य इति ।

मुक्तस्य बाणस्य लक्ष्यपर्यन्तं गमनमसनं तत्कर्तारोऽस्यन्तः । लक्ष्य-समीपगतस्य लक्ष्ये प्रवेशो वेधस्तत्कर्तारो विध्यन्तः । नम आसीनेभ्य इत्यादयोऽश्वपतिभ्यश्च वो नम इत्यन्ताः पञ्च मन्त्राः स्पष्टार्थाः । सोऽय-मुभयतोनमस्काररूपसप्तदशयजुरात्मकावान्तरमन्त्रसमुदायरूपस्तृती-योऽनुवाक एको मन्त्रः । अस्य भगवानेव ऋषिः । स एव देवता । बृहती-च्छन्दः । ध्यानम् ॥

रूपयौवनसंपन्ना मूर्तेव वनदेवता ।

नम॑ आव्या॒धिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमः॑॥१॥

॥ नम॒ उग॑णाभ्यस्तृꣳह॒तीभ्य॑श्च वो॒ नमः॑ ॥ २ ॥

---

पुष्पितानेकपुंनागसहकारशिखोपमा ॥
पञ्चविंशतिनक्षत्रमयूराकृतिशेखरः ।
अकलङ्कशरत्पूर्णचन्द्रबिम्बसमाननः ॥
प्रातर्विबुद्धपद्माभं वसानं चर्म कोमलम् ।
सव्यापसव्याविधृतकृत्तमालाविभूषितः ॥
धराकदम्बपुञ्जेन नाभिदेशप्रलम्बिना ।
आजङ्घं प्रेक्षणीयेन प्रेक्षणीयोऽपि शत्रुभिः ॥
भूधरस्य च चार्वङ्गी कन्याऽलंकारशोभिता ।
आदर्शमूर्तिः शोभानामन्या नारीव निर्मला ॥
तस्या हस्ते धनुर्दत्त्वा शरमेकं च निर्मलम् ।
तदीयमंसमालम्ब्याऽऽश्लिष्टं वामेन बाहुना ॥
सुगन्धिपुष्पस्तबकमाघ्रायाघ्राय पाणिना ।
वीज्यमानो मन्दमन्दं वनपल्लवशाखया ॥
समावृतो बालकैश्च श्वभिश्चापि मनोहरैः ।
गच्छद्भिरागतो दृष्टैर्ध्यातव्यो जगतां गुरुः ॥
एवंरूपो महातेजाः किरातवपुरीश्वर इति ।

स्वराष्ट्रव्याधिपरराष्ट्राभिचारशत्रुनाशनादिफलप्रदोऽयं मन्त्रः । प्राजापत्यपूर्वकपञ्चसहस्रजपादयं मन्त्रः सिध्यति । ततः प्रयोगार्हो भवति । इति तृतीयोऽनुवाकः ॥ ३ ॥

॥ चतुर्थोऽनुवाकः ॥

तृतीय इव चतुर्थेऽपि भगवान्सर्वात्मकत्वेन नमस्क्रियते । तत्र प्रथमो नम आव्याधिनीभ्य इति ।

आ समन्ताद्वेद्धुं शक्ताः स्त्रिय आव्याधिन्यः । विविधं वेद्धुं शक्ताः स्त्रियो विविध्यन्त्यः । ताश्च जगति यावन्त्यः सन्ति तावद्रूपेभ्यो वो नम इति पूर्ववत् ॥ १ ॥

अथ द्वितीयो नम उगणाभ्य इति ।

उत्कृष्टगणा उगणाः सप्तमातृकाद्याः। तथा हिंसितुं समर्था दुर्गाद्या उग्रदेवतास्तृंहन्त्यः । तद्रूपेभ्य इति पूर्ववत् ॥ २ ॥

अथ तृतीयो नमो गृत्सेभ्य इति ।

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ॥ ३ ॥
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ॥ ४ ॥
नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥ ५ ॥
नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ ६ ॥
नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ॥ ७ ॥
नमो रथिभ्योऽरथेभ्यश्च वो नमो ॥ ८ ॥

---

गर्धनशीला गृत्सा विषयलंपटास्तेषां पतयो गृत्सपतयः। शेषं पूर्ववत्३

अथ चतुर्थो नमो व्रातेभ्य इति ।

नानाजातीयाः संघा व्रातास्तेषां पतयो व्रातपतयः ॥ ४ ॥

अथ पञ्चमो नमो गणेभ्य इति ।

गणाः प्रमथास्तेषां पतयो नान्दिकेश्वरादयः॥ ५ ॥

अथ षष्ठो नमो विरूपेभ्य इति ।

विरूपा विकृतरूपा नानारूपा विश्वरूपाः । यद्वा ब्रह्मणो वस्तुतोऽविकारत्वेन परमार्थतो विगतरूपाः समारोप्यस्य रूपेण विषयो रूपवान्भवेदिति न्यायेन शुक्तिकायां रजतमिव ब्रह्मण्यध्यस्तं विश्वरूपमिति विश्वरूपाः ॥ ६ ॥

अथ सप्तमो नमो महभ्य इति ।

आणिमाद्यष्टैश्वर्योपेता महान्तस्तद्रहिताः क्षुल्लकाः ॥ ७ ॥

अथाष्टमो नमो रथिभ्य इति ।

रथवन्तो रथिनस्तद्रहिता अरथाः । नवमादयः । श्वपतिभ्य इत्यन्ता नव मन्त्राः स्पष्टार्थाः । तत्र च रथचालकाः सारथयः क्षत्तारः । त एव रथं नियच्छन्तः संग्रहीतारः। तक्षरथकारयोरवान्तरभेदन्द्भेदः। कर्मारा लोहकाराः। पक्षिपुञ्जानां घातुकाः पुञ्जिष्ठाः । निषादाः श्वपचाः । शुनकगलबद्धपाशधराः श्वपतयः । शेषं स्पष्टम्। तदेतदिषुमद्भ्य इत्येतदन्तैः षड्विंशतिमन्त्रैः प्रपञ्चान्तर्गतैकैकवस्त्वात्मकत्वप्रदर्शनेन विश्वरूपेभ्य इति साक्षात्कण्ठरवेण च भगवतश्चेतनाचेतनात्मकसकलप्रपञ्चरूपत्वमु-

नमो रथेभ्यो रथपतिभ्यश्च वो नमः ॥ ९ ॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमः ॥ १० ॥

नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः ॥ ११ ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥ १२ ॥

नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः ॥ १३ ॥

नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः ॥ १४ ॥

नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः ॥ १५ ॥

नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः ॥ १६ ॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥ १७ ॥

---

पवर्णितम् । एतच्च नमो ज्येष्ठाय चेत्यग्रे वक्ष्यमाणमपि सार्वात्म्यमुपलक्षयति । तेन च शिवाद्वैतमुक्तं भवति । तथा च श्रुतयः ।

प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते न सन्न चासच्छिव एव केवलः । एक एव रुद्रो न द्वितीयाय तस्थे । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः । सर्वो वै रुद्रः । अहमेव प्रथममासं वर्तामि च भविष्यामि च नचान्यः कश्चन मत्तो व्यतिरिक्त इति ।

स्मृतयश्च । भूतानि शंभुर्भुवनानि शंभुर्वनानि शम्भुर्गिरयश्च शंभुरित्याद्याः । तत्र चेतनाचेतनात्मकानां चेतनस्वरूपैक्यम् । तत्त्वमसि अहं ब्रह्मास्मीत्यादिप्रमाणसहस्रानुरोधात् । अचेतनात्मकत्वं तु आरम्भणाधिकरणन्यायेन तदध्यासाधिष्ठानत्वम् । अध्यस्तस्य अधिष्ठानव्यतिरेकेणासत्वस्य शुक्तिकाया रजतात्मकत्ववज्जगदध्यासाधिष्ठानस्य ब्रह्मणो जगदात्मकत्वादिति ब्रह्ममीमांसायां प्रपञ्चः । एतेन श्वभ्यः श्वपतिभ्यश्चेत्यातिनिकृष्टैः श्वादिभिः सह भगवतः कथमैक्यं श्रुत्या प्रतिपाद्यत इति शङ्का निरस्ता । न हि श्वशब्दवाच्यदेहविशिष्टभेदः श्रुत्योच्यते । किं

नमो॑ भ॒वाय॑ च रु॒द्राय॑ च॥ १ ॥

नमः॑ श॒र्वाय॑ च पशु॒पत॑ये च ॥ २ ॥

---

तु तल्लक्ष्यं निकृष्टोपाधि यज्जीवचैतन्यमुच्चनीचभावापन्नेषु शरीरेष्वनुस्यूतं तदात्मकत्वम्। तदेतद्गीतायां स्पष्टीकृतं भगवतैव विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताःसमदर्शिन इति॥ न चैतावता परमेश्वरस्य तदुपाधिगुणदोषसंबन्धलेशोऽस्ति। न हि गङ्गायां तटाके सुरायां मूत्रे वा प्रतिबिम्बमानस्यादित्यस्य तदुपाधिगुणदोषसंबन्ध इति सर्वमनवद्यम्॥ सोऽयमुभयतो नमस्काररूपः सप्तदशयजुरात्मकावान्तरमन्त्रसमुदायरूपश्चतुर्थानुवाक एको मन्त्रः। अस्य दुर्वासा ऋषिः। महाविराट्छंदः। शंभुर्देवता। ध्यानम्।

भस्मोद्धूलितसर्वाङ्गं जटामण्डलमण्डितम्।
ध्यायेद्देवं वृषारूढं गणेश्वरयुतं हरम्॥

राजयक्ष्मज्वरसंनिपातकुष्ठादिरोगपरिहारकोऽयं मन्त्रः। सार्धप्राजापत्यपूर्वकं सहस्रवारजपान्मन्त्रसिद्धिः। इति चतुर्थोऽनुवाकः॥ ४॥

॥ पञ्चमोऽनुवाकः ॥

इत्थं चतुर्थे सर्वात्मकत्वेन भगवान्नमस्कृतः। इदानीं भगवदसाधारणधर्मरूपतन्महिमानुसंधानपूर्वकं तन्नमस्कारमारभते। एतदारभ्य द्रापे इत्येतत्पर्यन्तमन्यतो नमस्काराः। सर्वत्र नमस्कारादिरेकैको मन्त्रः। यथा नमो भवाय च रुद्राय चेत्यादि। एवमन्येऽपि ज्ञेयाः। तत्र प्रथमं द्वाभ्यां मन्त्राभ्यां जगज्जन्मस्थितिसंहारबन्धमोक्षाख्यपञ्चकृत्यकारित्वरूपपरमेश्वरासाधारणमहिमानमनुसंदधानस्तं नमस्करोति नमो भवाय चेति।

भवत्यस्माज्जगदिति भवः। अनेन सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त इत्यादिश्रुतिप्रसिद्धं भगवतो जगज्जन्महेतुत्वं प्रदर्शितम्। रुदं संसारदुःखं द्रावयतीति रुद्रः। अनेन यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥ रुद्रस्तारकं ब्रह्म व्याचष्ट इति श्रुतिप्रसिद्धं मोक्षहेतुत्वमुक्तम्। शृणाति हिनास्ति सर्वमिति शर्वः। अनेन तस्मा उपसंहर्त्रे महाग्रासाय नम इत्यादिश्रुतिप्रसिद्धं जगत्संहर्तृत्वमुक्तम्। पशुपतिशब्देन बन्धस्थितिहेतुत्वमुच्यते। पशुशब्देन संसारबन्धस्य पतिशब्देन तद्रक्षणस्य चोक्तेः।

नमो नीलग्रीवाय च शितिकण्ठाय च ॥ ३ ॥
नमः कपर्दिने च व्युप्तकेशाय च ॥ ४ ॥
नमः सहस्राक्षाय च शतधन्वने च ॥ ५ ॥

---

तथा च संसारमोक्षस्थितिबन्धहेतुरिति श्रुतिप्रसिद्धं जगत्स्थितिबन्धहेतुत्वमुक्तं भवतीत्याहत्य पञ्चकृत्यहेतुत्वेन भगवन्नमस्कारो मन्त्रद्वयार्थः। अत्र नमःशब्दस्य प्रत्येकं चतुर्थ्यन्तपदाभ्यामन्वयं द्रढयितुं समुच्चयार्थौ चकारौ फलितौ। तेन भवाय च नमः शर्वाय च नम इत्यन्वयो भवति। एवमग्रेऽपि सर्वत्र द्रष्टव्यम् ॥ १ ॥ २ ॥

अथ तृतीयो नमो नीलग्रीवायेति।

कालकूटग्रसनेन नीला ग्रीवा कण्ठो यस्य स नीलग्रीवः। तद्ग्रसनात्पूर्वं शितिर्धवलः कण्ठो यस्य स शितिकण्ठः। अनेन स्वतो धवलकण्ठे कालकूटप्रयुक्तं नैल्यं दोषमविगणय्य जगदेकरक्षणाय विषं कवलितवतो भगवतः सर्वलोकदयालुत्वमर्हन्निदं दयसे विश्वमित्यादिश्रुतिप्रसिद्धं प्रदर्शितम् ॥ ३ ॥

अथ चतुर्थो नमः कपर्दिन इति।

कपर्दः परमेश्वरजटाकलापस्तद्वान्कपर्दी। अनेन दक्षं सयज्ञं जहि त्वं भटानां त्वमग्रणी रुद्रजटांशको मे इति भागवतादिप्रसिद्धो भगवज्जटांशवीरभद्रमहिमा स्मर्यते। तेन च देवा वै यज्ञाद्रुद्रमन्तरायन्स यज्ञमविध्यदित्यादिश्रुतिप्रसिद्धदक्षाध्वरध्वंसमहिमा दर्शितः। व्युप्ता मुण्डिताः केशा यस्य स व्युप्तकेशः परमहंसपरिव्राजकः। अथ परिव्राडेकशाटी शिष्यपरिवृतो मुण्डोदरपात्री ज्ञानशिखिनो ज्ञानयज्ञोपवीतिन इत्यादिश्रुतेः। तेन दत्तात्रेयदुर्वासःप्रभृतयो जाबालोपनिषदादिप्रसिद्धाः कलियुगे च चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति। शंकरः सवितानन इत्यादिपुराणप्रसिद्धपरमेश्वरावतारभावाः शंकराचार्यस्वामिनस्तद्रूपायेत्यर्थः। अनेन ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरिति श्रुतिप्रसिद्धं ब्रह्मविद्यासंप्रदायप्रवर्तकत्वमुक्तम् ॥ ४ ॥

अथ पञ्चमो नमः सहस्राक्षायेति।

सहस्रमनन्तान्यक्षीणि यस्य स सहस्राक्षः। अनेन यः सर्वज्ञ इत्यादि श्रुतिप्रसिद्धः सर्वज्ञत्वमहिमा दर्शितः। शतमनन्तानि धन्वानि धनूंषि

नमो॑ गिरि॒शाय॑ च शिपिवि॒ष्टाय॑ च ॥ ६ ॥

नमो॑ मी॒ढुष्टमाय॒ चेषु॑मते च ॥ ७ ॥

नमो॑ ह्र॒स्वाय॑ च वाम॒नाय॑ च ॥ ८ ॥

---

वेदप्रणवमेर्वादिरूपाणि यस्य स शतधन्वा। स तथोक्तस्तथेत्युक्त्वा विष्णुं कृत्वा शरोत्तमम्। शल्यमग्निं तथा कृत्वा धनुर्मेरुमकारयत् ॥ कृत्वा च धनुरोंकारं सावित्रीं ज्यां महेश्वर इत्यादिभारतोक्तवेदप्रणवमेरुपिनाकाद्यनेकधनुर्युक्तायेत्यर्थः । अनेन तेषामसुराणां तिस्रः पुर आसन्निति श्रुतिप्रसिद्धत्रिपुरसंहारमहिमा दर्शितः ॥ ५ ॥

अथ द्वाभ्यां त्रिमूर्त्यात्मकत्वं विश्वाधिकत्वं च दर्शयति नमो गिरिशायेति ।

गिरिः कैलासः सोऽस्यास्तीति गिरिशः । लोमादित्वान्मत्वर्थीयः शः। तद्रूपायेत्यर्थः। शिपिविष्टो विष्णुः। विष्णुः शिपिविष्ट इति श्रुतेः। विष्णुरूपायेत्यर्थः। मीढुष्टमोऽतिशयेन वीर्यसेचको जगत्स्रष्टा हिरण्यगर्भस्तद्रूपायेत्यर्थः। अनेन स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराडित्यादिश्रुतिप्रसिद्धत्रिमूर्त्यात्मकत्वमुक्तं भवति । प्रशस्त इषुरस्यस्तीतीषुमान्। प्रशंसायां मतुप्। प्राशस्त्यं चेषोः। तइषु ँ समस्कुर्वताग्निमनीक ँ सोम ँ शल्यं विष्णुं तेजनमित्यादि श्रुत्युक्तं द्रष्टव्यम्। तेन च सर्वदेवानामपि त्रिपुरसंहारीयं भगवत्परिकरत्वमनुस्मर्यते । तेन च यो देवानां प्रभवश्चोद्भवश्च । विश्वाधिपो रुद्रो महर्षिः। अङ्गान्यन्या देवताः ॥ इत्यादिश्रुतिप्रसिद्धं विश्वाधिकत्वं प्रदर्शितम्।। ७ ॥

अथाष्टमो नमो ह्रस्वायेति ।

शरीरे लघुप्रमाणो ह्रस्वः। अनेन तत्रापि दहरं गगनं विशोक इत्यादिश्रुतिप्रसिद्धं दहरविद्योपास्यत्वं प्रदर्शितम्। संकुचितपाद्याद्यवयवो वामनो महागणपतिस्तद्रूपायेत्यर्थः। महागणपतेः साक्षात्परमेश्वरावतारत्वस्य मन्त्रशास्त्रपुराणादिप्रसिद्धेः। अनेन गणानां त्वा गणपति ँ हवामह इति श्रुतिप्रसिद्धो महिमा दर्शितः ॥ ८ ॥

नमो बृहते च वर्षीयसे च ॥ ९ ॥

नमो वृद्धाय च संवृध्वने च ॥ १० ॥

---

अथ नवमो नमो बृहत इति ।

देशकालवस्तुकृतत्रिविधपरिच्छेदराहित्यं बृहत्त्वमिति ब्रह्ममीमांसायां व्यवस्थापितम् । बृहते परब्रह्मण इत्यर्थः । अथ कस्मादुच्यते परं ब्रह्मेति यस्माद्बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेत्यथर्वशिरःश्रुतेः । अनेन ऋत॰ सत्यं परं ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुत्युक्तं परब्रह्मत्वं दर्शितं भवति । गुणैः समृद्धो वर्षीयान् । अनेन सत्यकामः सत्यसंकल्पः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्यादिश्रुत्युक्तदिव्यगुणमहिमा प्रदर्शितः ॥ ९ ॥

अथ दशमो नमो वृद्धायेति ।

सर्वापेक्षया वयोधिको वृद्धः सर्वैः स्वयं पूज्यः । न तु स्वस्य कश्चित्पूज्यो वन्द्यश्चास्तीत्यर्थः । अत एव खलु पुराणे श्रूयते यस्यास्ति शक्तिः स तु वन्दितव्यः स कः करोत्वङ्गुलिकां पुरो मे । कः पूजितः स्याच्छशिशेखरेण नाराधितो भूतपतिस्तु वा कैरिति । अनेन यस्मै नमस्तच्छिरो धर्म इति श्रुतिप्रसिद्धं सर्वनमस्कारविषयत्वमुक्तं भवति । यद्यपि यस्मै नमस्तच्छिर इति सामान्येन श्रूयते तथापि त्वं भूताना॰ श्रेष्ठोऽसीति परमेश्वरं प्रस्तुत्य सर्वं ते नम इत्युपसंहारे सर्वस्यापि नमस्कारस्य तदीयत्वोक्त्या यस्मै नम इत्युपक्रमेऽपि नमस्कारविषयत्वेन निर्दिष्टः परमेश्वर एवेति निश्चीयते । तस्यैव निजचिच्छक्तिरूपशिशुमाराद्याधारत्वेन प्रधानतया तच्छिरोरूपप्रधानावयवत्वेन निरूपणौचित्याद्देवतान्तराणां तदाकृतिं प्रति मूर्धहनुहृदयमध्यचरणपुच्छरूपत्वेन स्वस्वनामभिः पृथङ्निर्दिष्टत्वादित्यन्यत्र विस्तरः । सम्यगसाधारण्येन स्तुतिनमस्कारैर्वर्धितः स वृध्वा अनेन मा त्वा रुद्र चुक्रुधा मा नमोभिर्मा सुष्टुती वृषभ मा सहूती उन्नो विरा॰ अर्पय भेषजेभिः । भिषक्तमं त्वा भिषजां शृणोमि । दुष्टुत्या सदृशस्तुत्या समानाह्वानकर्मणा । न वयं चुक्रुधाम त्वां सर्व देवनमस्कृत इति श्रुतिपुराणसिद्धमनितरदेवतासाधारणस्तुतिनमस्कारैकविषयत्वं दर्शितं भवति ॥ १० ॥

